# अथ चतुरशीतिपूजा

## चतुरशीतिपूजा/सहस्रचन्द्रदर्शनोद्यापनविधि (पूर्व दिन मातृका र आभ्युदयिक श्राद्ध गर्ने)

पूर्वदिने मातृकापूजनादिकं कृत्वा मण्डपं निर्माय संपूज्य च अपरदिने चतुरशीतिपूजा कर्तव्या।

## प्रतिज्ञासंकल्प (प्रतिज्ञासङ्कल्प गर्ने)

ॐ अद्येत्यादिदेशकालौ स्मृत्वा ... गोत्रस्य ... प्रवरस्य शुक्लयजुर्वेदान्तर्गत माध्यन्दिनीय-वाजसनेयशाखाध्यायिनश्चतुरशीतिवर्षे वर्तमानस्य दृष्टपूर्णचन्द्रसहस्रस्य ... ... शर्मणो मम श्रीचन्द्रहरेः प्रसादात् पुत्रपौत्रादीनामायुरारोग्यैश्वर्योदयाद्यभिवृद्ध्यर्थं स्वस्य च कृत्याकृत्यभोज्याभोज्यगम्यागम्यपेय्यापेय्यवाच्यावाच्यकर्माननुसन्धानवशात् उत्पन्नानां ज्ञाताज्ञातशुष्कार्द्रलघुगुर्वादिपापानां क्षयपूर्वकं चन्द्रमार्गेण श्रीहरिपदप्राप्त्यर्थं श्रीदीपकलश-गणेशपूजनपूर्वकं चन्द्रसहस्रपूजनं तदङ्गत्वेन हवनं ब्राह्मणदम्पत्योः पूजनं चाहं करिष्ये।। इति सङ्कल्प्य।

## दीपादीनां पूजनम् (ब्राह्मण वरण, पुन्यवाचन गर्ने र दियो कलश गणेश पूजा गर्ने)

दीपं प्रज्वाल्य स्वस्तिवाचनं कृत्वा कुण्डे वन्हिं संस्थाप्य चतुरः पञ्च षोडशो वा ब्राह्मणान् वृत्वा पुण्याहं च वाचयित्वा दीपगणेशकलशग्रहमातृकावास्तुमण्डलदेवानां सर्वतोभद्र च पूजां विधाय चन्द्रसहस्रपूजनं कुर्यात्।

## प्रतिमास्थापनप्रकार (कलशमा थालीमाथि प्रतिमा राख्ने)

शुभधान्योद्भूतैरक्षुण्णैस्तण्डुलैः सहस्रसङ्ख्याकाश्चन्द्रमण्डलनिभा वेद्यः आस्तीर्णश्वेत-वस्त्रोपरि कार्याः। तासु च प्रत्येकं रौप्यमयान् कलशान् संस्थाप्य तेषां मुखेषु रौप्यमयीः स्थालीश्च संस्थाप्य षोडशमाषपरिमितेन रौप्येण प्रत्येकं निर्मिता चन्द्रबिम्बनिभाः षोडशकलायुताः प्रतिमाः स्थापयेत्।

तच्च यथा –

मध्ये तण्डुलोपरि गोदुग्धपूरितं रौप्यकलशमेकं स्थापयेत्। तस्य मुखे च रौप्यस्थाल्यां चन्द्रप्रतिमां न्यसेत्। तस्य कलशस्य (आग्नेयादि) चतुष्कोणेषु चत्वारः कलशाः स्थाप्याः। तेषु च पूर्ववच्चतस्रः स्थालीः संस्थाप्य तासु एकैकां प्रतिमां स्थापयेत्। सति सम्भवे एतेऽपि कलशा गोदुग्धेनैव पूरणीयास्तदभावे जलेन पूरणीयाः किञ्चिद् गोदुग्धं च तेषु निक्षेप्तव्यम्। ततो बहिः पूर्णचन्द्राकाराः श्वेततण्डुलमया विस्तृता ९७९ संख्याका वेदीर्निर्माय तासु च सतिसम्भवे पूर्ववत् कलशप्रतिमादिकं स्थापयेत्। तदसम्भवे ९७९ मृत्कुम्भेषु पूर्णपुटकेषु वा जलं निक्षिप्य तेषु प्रतिमास्वरूपाणि रौप्यखण्डानि द्रव्याणि वा स्थापयेत्। असम्भवे तु पूर्वोक्ताः षोडशकलशादयोऽपि मृदादिका एवोपयोक्तव्याः। ताम्रकलशप्रयोगं तु सजलदुग्धेन पूरणीयाः। ततो मध्यकलशे चन्द्रहरेः प्रतिमायां प्राणप्रतिष्ठां कुर्यात्।

## प्राणप्रतिष्ठा

(फूल अक्षता लिई प्रतिमालाई छुने)

आदौ विनियोगः तद्यथा – अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुः सामानि छन्दांसि जगत्सृष्टिः प्राणशक्तिर्देवता आं बीजम्, ह्रीं शक्तिः, क्रौं कीलकम् प्राणप्रतिष्ठापने विनियोगः ।

ततः प्राणप्रतिष्ठा – दक्षिणहस्ताङ्गुलीभिः प्रतिमां स्पृष्ट्वा इमानि मन्त्राणि पठेत् – अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ इति प्राणान् प्रतिष्ठाप्य न्यासं कुर्यात् । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः जीव इह स्थितः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा । ॐ मनो जूति ... मों ३ प्रतिष्ठ ॥

ततः कलान्यासः – अनेन मन्त्रेण – ॐ भूर्भुव स्वः यमुनातीरोद्भव आत्रेय सगोत्र शुकृतवर्ण सम्पूर्णषोडशकल सोम इहागच्छ, इत्यावाह्य दक्षिणहस्ताङ्गुलिभिरेव प्रतिमां सर्वतः स्पृशन् इदं मन्त्रं पठेत् –

**ॐ इमन्देवा असत्न꣬ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्यायमहते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोमी राजा सोमोस्माकं ब्राह्मणाना꣬ राजा ।** । इति ।

ततः स्वशरीरशुद्धये प्रणवं च पञ्चदशवारं जपेत् । ततः षोडशोपचारेण चन्द्रहरेः पूजां कुर्यात् । सोमसूक्तेन प्रत्यृचं पुराणमन्त्रैश्च प्रतिमन्त्रम् आसनपाद्यार्घ्याचमनादिना ततो धूपदीपनैवेद्ययज्ञोपवीतताम्बूलपूगीफलवस्त्रद्रव्यमाल्यादिभिश्चन्द्रहरेः पूजां विधाय शङ्खघण्टादिवादनं कृत्वा षोडशनामभिः पुनस्तस्य पूजां कुर्यात् । तत्प्रकारो यथा –

## चन्द्रहरेः पूजनम्

(पूजा गर्ने)

भो चन्द्रहरे ! इहागच्छ इहतिष्ठ यावत्पूजां करोमि तावत्त्वम् अस्यां प्रतिमायां सुस्थिरो भव । ततः सोमसूक्तस्य विनियोगः । त्वं सोम इत्यादि सोमसूक्तस्य त्रयोविंशत्यृचः गौतमऋषिर्गायत्र्युष्णिक्त्रिष्टुप्छन्दांसि सोमो देवता जपे विनियोगः । इति विनियोगं कृत्वा –

## आसनम्

(आशन राख्ने)

त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥
चन्द्रदेव नमस्तुभ्यं जगतां शन्तिदायक । आसनं वै मया दत्तं गृहाण रोहिणीप्रिय ॥
आसनं समर्पयामि चन्द्रहरये नमः ।

## पाद्यम्

(जल चढाउने)

त्वं सोम क्रतुभिः सुक्रतुर्भू –
स्त्वं दक्षैः सुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिमहित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥
शशाङ्क रेवतीनाथ प्राणिना तापहारक । पाद्यंगृहाण मद्दत्तं सर्वपापहरो भव ॥ पाद्यं समर्पयामि चन्द्रहरये नमः ।

## अर्घ्यम्
(अर्घ्य चढाउने)

राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम ।

शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥

दधिगन्धजलैर्युक्तमिदमर्घ्यं पुरःस्थितम् । शशिन् आदेहि भोगार्थं मम शान्तिप्रदो भव ॥

अर्घ्यं समर्पयामि चन्द्रहरये नमः ।

## आचमनीयम्
(जल चढाउने)

या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वौषधीष्वप्सु ।

तेभिर्नो विश्वैः सुमना अहेड न्राजन्त्सोम प्रति हव्या गृभाय ॥

हिमाद्रिदुहितुः शुद्धं शीतलं वारि मङ्गलम् । दत्तमाचमनार्थं वै सोमेदं प्रतिगृह्यताम् ।

आचमनीयं समर्पयामि चन्द्रहरये नमः ।

## पञ्चामृतस्नानम् – तत्रादौ पयःस्नानम् –
(दूध चढाउने)

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥

देवाद्यैर्वन्दिता धेनुः सर्वपापप्रणाशिनी । तत्क्षीरस्नापितो देव नित्यं मे वरदो भव ॥

ततः – ॐ आपोऽअस्मान्निति शुद्धोदकस्नानम् ।

## दधिस्नानम्
(दही चढाउने)

ॐ दधिक्राव्णोऽअकारिषं जिष्णोरस्वस्य वाजिनः । सुरभि नो मुखाकरत् प्रणऽआयूꣳषि तारिषत् ॥

कामतोऽकामतो वापि यन्मया दुष्कृतं कृतम् । तत्सर्वं विलयं यातु दधिस्नानेन सर्वदा ॥ आपोऽअस्मान् ।

## घृतस्नानम्
(घ्यू चढाउने)

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।

अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥

रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियम् । तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव ॥ ॐ आपोऽअस्मान् ० ।

---

चौरासी पूजामा हवन कुण्डसहित मण्डप तयार पार्नु पर्दछ । बीचमा १७ वटा कलश अटाउने गरी वेदी बनाउनु पर्दछ । ग्रहवेदी पनि बनाउनु पर्दछ । मातृका पूजा, आभ्युदयिक श्राद्ध, ग्रह पूजा सर्वतोभद्रमा ८४ कलश थाली राखेर सिद्धहरूको पूजा, चाँदीको १६ चन्द्रमाको पूजा, बीचमा लक्ष्मीनारायणको पूजा, सबै देवतालाई हवन, २७ नक्षत्रहरूको पूजा, वेद पाठ, पाञ्चायन पाठ, गीता पाठ, ८६ गौदान, दशदान, अष्टमहादान, गोदान, शय्यादान, गीतादान गर्नुपर्दछ । पूजा सकेर व्रतालुलाई खाटमा बसाएर सजिसजाऊ गराई गाउँघरमा परिक्रमा गराउने चलन पनि छ । परिक्रमा गराउन नसके सबै भेला भएर स्वागत गर्नुपर्दछ ।

## मधुस्नानम्
(मह चढाउने)

ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥

मधु नक्तमुतोषसो मधुमत्पार्थिव ꣳ रजः । मधु द्यौरस्तु नः पिता ॥

मधुमान्नो वनस्पतिर्मधु माँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ आपोऽअस्मान्० ।

## शर्करास्नानम्
(चिनी वा सक्खर चढाउने)

ॐ अपा ꣳ रसमुद्वयस ꣳ सूर्ये सन्त ꣳ समाहितम् । अपा ꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥

तत आपोऽअस्मान्निति शुद्धोदकस्नानं समर्पयामि चन्द्रहरये नमः ।

## वस्त्रम्
(कपडा चढाउने)

गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः सुमित्रः सोम नो भव ॥

शुक्लाम्बरधरो नित्यं शुक्लवर्णच शोभन । शुक्लवस्त्रं मया दत्तं परिधेहि शुभप्रद ॥ वस्त्रं समर्पयामि चन्द्रहरये नमः ।

## यज्ञोपवीतम्
(जनै चढाउने)

सोम रारन्धिनो हृदि गावो न यवसेष्वामर्यइवस्व औक्ये ।

जैवातृक निशानाथ शम्भुचूडास्थितः शुभः ।

यज्ञोपवीतं देवेश मया दत्तं गृहाण भोः ॥ यज्ञोपवीतं समर्पयामि चन्द्रहरये नमः ॥

## गन्धम्
(चन्दन चढाउने)

त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ॥

मलयाचलसंभूतं सुगन्धं चन्दनं शुभम् । इन्दो दत्तं मया तुभ्यं गृहीत्वा कीर्तिदो भव ॥

गन्धं समर्पयामि चन्द्रहरये नमः ।

## अक्षतान्
(अक्षता चढाउने)

त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः ॥

अक्षतानक्षतो भूत्वाऽऽदेहि कुमुदबान्धव । अक्षतं मे यशः कुर्याः सन्ततीश्च सदैव मे ॥

अक्षतान्समर्पयामि चन्द्रहरये नमः ।

## पुष्पाणि
(फूल चढाउने)

त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवसे ॥

सुगन्धीनि सुपुष्पाणि विधो कालोद्भवानि च । आयच्छ गन्धवत्तेषां मम कीर्तिं प्रवर्धय ॥

पुष्पाणि मालाश्च समर्पयामि चन्द्रहरये नमः ।

## धूपम्
(धूप बाल्ने)

त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्ये त्वावतः सखा ॥

धूपोऽयं कुङ्कुमैर्युक्तो गुग्गुलो वृक्षसम्भवः । सुधांशो गृह्यतामेष मया दत्तः सुसौरभः ॥

धूपं समर्पयामि चन्द्रहरये नमः ।

## दीपम्
(बत्ती बाल्ने)

सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥

दीपोऽयं गोघृताक्तश्च तिमिरान्तकरः परः । शुभ्रांशो स्वीकुरुष्व त्वं ममाज्ञानहरो भव ॥

दीपं समर्पयामि चन्द्रहरये नमः ।

## नैवेद्यम्
(नैवेद्य चढाउने)

इमं यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥

मोदकं शस्कुलीं पूपं संयावं कर्णसस्कुलीम् । पायसं च गृहाणत्वमोषधीश नमो नमः ॥

नैवेद्यं समर्पयामि चन्द्रहरये नमः ।

## पुनराचमनीयम्
(जल चढाउने)

सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृडीको न आविश ॥

निशापते नमस्तुभ्यं सुस्वादु शीतलं जलम् । पुनराचमनार्थं वै दत्तं ते प्रतिगृह्यताम् ॥

पुनराचमनीयं समर्पयामि चन्द्रहरये नमः ।

## ताम्बूलम्
(पान चढाउने)

उरुष्याणो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥

खादिरादिसमायुक्तं तेजोत्साहप्रदायकम् । ताम्बूलं प्रददे तुभ्यं कलानां निधये नमः ॥

ताम्बूलं समर्पयामि चन्द्रहरये नमः ।

## पुगीफलम्
(सुपारी चढाउने)

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ।

मुखशुद्धिकरं देव पूगीफलमिदं तव । दीयते श्रद्धया मिष्टं द्विजराज नमोऽस्तु ते ॥

पूगीफलं समर्पयामि चन्द्रहरये नमः ।

## द्रव्यम्
(पैसा चढाउने)

यः सोम सख्ये तव रराणद्देव मर्त्यः । तं दक्षः सचते कविः ॥

येन तुष्यन्ति राजानो भिक्षुका धनिनोऽपि वा । देवाश्च तत्प्रयच्छामि द्रव्यं चन्द्राय ते नमः ॥

द्रव्यं समर्पयामि नीराजनम्, चामरम्, व्यजनम् प्रदक्षिणा च चन्द्रहरये नमः ॥

## षोडशनामभिश्चन्द्रपूजनम्

(चन्द्रमाको १६ नामले पूजा गर्ने)

एवं षोडशोपचारैश्चन्द्रहरेः पूजां विधाय पुनः षोडशनामभिश्चन्द्रपूजां कुर्यात् । तद्यथा –

१. ॐ हिमांशवे नमः । २. ॐ सोमचन्द्राय नमः ।
३. ॐ चन्द्राय नमः । ४. ॐ विधवे नमः ।
५. ॐ कुमुदबन्धवे नमः । ६. ॐ सुधांशवे नमः ।
७. ॐ ओषधीशाय नमः । ८. ॐ अब्जाय नमः ।
९. ॐ मृगाङ्काय नमः । १०. ॐ कलानिधये नमः ।
११. ॐ नक्षत्रनाथाय नमः । १२. ॐ शर्वरीपतये नमः ।
१३. ॐ जैवातृकाय नमः । १४. ॐ द्विजराजाय नमः ।
१५. ॐ रोहिणीवल्लभाय नमः । १६. ॐ इन्दवे नमः ।

एवं नामभिः सम्पूज्य पुष्पादिकं गृहीत्वा सोमसूक्तेन एभिः पौराणमन्त्रैश्च स्तुतिं कुर्यात् ।

## प्रार्थना

(फूल अक्षता लिएर नमस्कार गर्ने)

आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवानः सुश्रवस्तमः सखावृधे ॥ सं तेपयांसि समुयन्तु वाजाः । संवृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽ वीरहा प्रचरा सोम दुर्यान् ॥ सोमो धेनुꣳ सोमोऽअर्वन्तमाशुꣳसोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्य सभेयं पितृश्रवणं यो ददाशदस्मै ॥ अषाढंयुत्सु पृतनासु पप्रिं स्वर्षामप्सां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः । त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ ॥ देवेन नो मनसा देव सोम रायो भागꣳसहसावन्नभि युध्य । मा त्वा तनदीशिष्ये वीर्यस्योभयेभ्यः प्रचिकित्सागविष्टौ । । इति ।

१. हिमांशवे नमश्चैव २. सोमचन्द्राय वै नमः ।
३. चन्द्राय ४. विधवेनित्यं
५. नमः कुमुदबन्धवे ॥ ६. सुधांशवे च सोमाय
७. ओषधीशाय वै नमः । ८. नमोऽब्जाय
९. मृगाङ्काय १०. कलानां निधये नमः ॥
११. नमो नक्षत्रनाथाय १२. शर्वरीपतये नमः ।
१३. जैवातृकाय सततं १४. द्विजराजाय वै नमः ॥
१५. इन्दवे च नमस्तुभ्यं १६. रोहिणिवल्लभाय च ।

इति च पठित्वा स्वाञ्जलौ गृहीतं पुष्पादिकं चन्द्रहरये समर्पयेत्। शङ्खजलनिवेदनम् – (शङ्खको जल चढाउने)
ततश्च पुष्पफलचन्दनसहितं शङ्खतोयं गृहीत्वा –

नमस्ते मासमासान्ते जायमानः पुनः पुनः। गृहाणार्घ्यं शशाङ्क त्वं रोहिण्या सहितो मम॥

इति शङ्खतोयं चन्द्रहरये समर्पयेत्।

अन्यकलशेष्वपि चन्द्रस्य पूजनम्, लक्ष्मीनारायणपूजनम् हवनम् ब्राह्मणभोजनञ्च। तदन्तरं चतुष्कोणेषु स्थापितेषु चतुर्ष्वपि कलशेषु तथैव पूजयेत्। पूर्वोक्तेनैव विधिना षोडशष्वपि कलशेषु षोडशोपचारेण चन्द्रस्य पूजां कृत्वा अवशिष्टेष्वपि कलशेषु पर्णपुटकेषु मृत्कुम्भेषु वा तन्त्रेण चन्द्रस्य पूजां कुर्यात्। सोममन्त्रेण सहस्रसङ्ख्यका आहुतीर्जुहुयात्। सोमसूक्तं सोमोत्पत्तिं च पाठयेत्। मिष्टान्नपक्वान्नादिभिर्ब्राह्मणान् भोजयित्वा स्वयं च प्रसादीभूतं पवित्रमन्नं संभुज्य चन्द्रोत्पत्तिकथां श्रृण्वानो नियमेनैव दिनं नीत्वा रात्रौ च अधः सुप्त्वा अपरस्मिन् दिने भगवतो लक्ष्मीसहितस्य नारायणस्य पूजां कुर्यात्।

## शय्यादानप्रतिज्ञा

(शय्यादान तयार गर्ने)

ततः खट्वादिकमानीय तस्योपरि शय्यामास्तीर्य तस्य समीपे वर्षभोग्यपरिमितं यथाशक्ति वान्नं द्विदल-व्यञ्जन-घृत-लवणादीनि भोग्य भोज्य-वस्तूनि पाकस्थाल्यादीनि भाण्डानि सप्तधान्यादीनि च संस्थाप्य विष्णुलक्ष्मीप्रतिमां च शय्योपरि स्थापयित्वा 'विष्णोरराट' मित्यादिभिः 'श्रीश्च ते' इत्यादिभिर्मन्त्रैर्विष्णुलक्ष्म्यौ च सम्पूज्य ब्राह्मणदम्पती च पूजयेत्। तौ च वस्त्राभूषणादिभिः सम्भूष्य शय्यासङ्कल्पं कुर्यात्। तद्यथा।

## द्विजदम्पतीपूजनम् शय्यादानसंकल्पश्च

(ब्राह्मण ब्राह्मणीलाई पूजा गर्ने)

तदा पुण्यकाले सूपलिप्तायां भूयौ प्राङ्मुख उपविश्व दीपं प्रज्वाल्याचम्य हंसतूल्यादिसमायुक्तां शय्यां पूर्वारायतामास्तीर्य शिरः प्रदेशे निद्राकलशाख्यं घृतपूर्णं ताम्रकलशं निधाय पादप्रदेशे ज्वलन्तं चतुर्वर्तियुतं दीपं संस्थाप्य अधः प्रदेशे कर्पूरादिवासितं जलकलशंसंस्थाप्य अन्यानि चोपकरणानि पार्श्वयोः संस्थाप्य शय्योपरि अग्न्युत्तारितां पञ्चामृतस्नापितां पञ्चगुञ्जाऽन्यूनसुवर्णनिर्मितां लक्ष्मीनारायणप्रतिमां संस्थाप्य यथोक्तलक्षणं ब्राह्मणमुदङ्मुखमुपवेश्य गणेशादीन् गुर्वादींश्च प्रणम्य पुष्पाञ्जलिं च तेभ्यो दत्वा अर्घस्थापनादिभूतोत्सादनान्तं कृत्वा कुशादिकमादाय – (शय्या दान प्रतिज्ञा सङ्कल्प गर्ने)

देशकालौ सङ्कीर्त्य दानकल्पोक्तफलकामः सकलपापलक्षयपूर्वकं विष्णुप्रीतिकामो वा शय्यादानमहं करिष्ये। इति प्रतिज्ञां कृत्वा शय्यादानप्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वकं वरणं कृत्वा लक्ष्मीनारायणप्रतिमाम् 'ॐ एतन्ते' इति प्रतिष्ठाप्य पुरुषसूक्तादिना षोडशोपचारैः सम्पूज्य शय्यां च नाम मन्त्रेण सम्पूज्य 'ॐ नमः प्रमाण्यै देव्यै' इति चतुर्दिशं तां प्रदक्षिणीकुर्वन् प्रणम्य हस्ते कुशादिकमादाय – (सङ्कल्प गर्ने र दान गर्ने)

देशकालौ सङ्कीर्त्य अहं ममात्मनः स्त्रीसहस्रावृतदशवर्षसहस्रस्वर्गलोकवाससर्वसुखप्राप्तिपूर्वकइन्द्रलोकवास-अप्सरोगणसेव्यमानविमानारोहणपूर्वक आभूतसम्प्लवावधिस्वर्गवासकामः सकलपापक्षयपूर्वकपरमेश्वरप्रीतिकामो वा इमां सालदारुमयीं हंसतूलीगण्डोपधान-प्रच्छादन-पटादिवस्त्रघृतकुम्भजलकलश-ताम्बूल-कुङ्कुम-अगरु-

कर्पूरचन्दन दीपिका-पादुकोपानत्-छत्र-चामरासन-नानाविधभाजन-सप्तधान्य-सुवर्ण-रजत-भूषण-विविधभक्ष्य-भोज्यादर्श-कङ्कण-यथासम्भव-पट्ट-कौशेय-क्षौमौर्णकार्पास-वस्त्र-वाहनायुध-हैमलक्ष्मीनारायणप्रतिमायुतां शय्यां प्रजापतिदैवतां यथानामगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे । न मम इत्युक्त्वा अञ्जलिं बद्ध्वा प्रार्थयेत् ।

## प्रार्थना

(नमस्कार गर्ने)

यथा न कृष्णशयनं शून्यं सागरजातया । शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ।
इति पठेत् ।

(दानप्रतिष्ठा, गोदान गरी पूर्णपात्र दक्षिणा गर्ने)

ततः गोदानं कृत्वा नीराजनं प्रदक्षिणादिकं च कृत्वा पुर्णपात्रं भूयस्यादिदक्षिणाः सति सम्भवे अन्यान् षोडशकलशान् वस्त्राभूषणदक्षिणादींश्च ब्राह्मणेभ्यो दत्त्वा तदसम्भवे सवस्त्रं भूषणदक्षिणान् पूर्वपूजितानेव षोडश एकविंशतिसंख्यकान् पूर्वपूजितानेव कलशान् ब्राह्मणेभ्यो दत्त्वा मिष्टपक्वान्नादिभिर्ब्राह्मणान् भोजयित्वा स्वयं च प्रसादीभूतं पवित्रमन्नं संभुज्य नियमं च विसर्जयेत् । अत्र केचित् कुमारिकाणां पूजां च कुर्वन्ति । इति स्कन्दपुराणानुसारिणी चन्द्रसहस्रपूजापद्धतिः समाप्ता ।

## चन्द्रसहस्रदर्शनविधिकथनम्

(स्कन्दपुराणमा कथा छ)

चन्द्रसहस्रदर्शनविधिश्च श्रीस्कन्दमहापुराणे द्वितीये वैष्णवखण्डे अयोध्यामाहात्म्ये व्यासागस्त्यसंवादे यथा –

## चन्द्रसहस्रदर्शनव्रतकथा

(पाठ गर्ने)

श्री व्यास उवाच –

भगवान् ब्रूहि तत्त्वेन तस्य चन्द्रहरेः शुभम् । उत्पत्तिञ्च तथा चन्द्रव्रतस्योद्यापने विधिम् ॥१॥

अगस्त्य उवाच –

अयोध्यानिलयं विष्णुं नत्वा शीतांशुरुत्सुकः । आगच्छत्तीर्थमाहात्म्यं साक्षात्कर्तुं सुधानिधिः ॥
अत्रागत्य च चन्द्रोऽथ तीर्थयात्रां चकार सः ॥२॥
क्रमेण विधिपूर्वं च नानाश्चर्यसमन्वितः । समाराध्य ततो विष्णुं तपसा दुश्चरेण वै ॥३॥
तत्प्रसादं समासाद्य स्वाभिधानपुरस्सरम् । हरिं संस्थापयामास तेन चन्द्रहरिः स्मृताः ॥४॥
वासुदेवप्रसादेन तत् स्थानं जातमद्भुतम् । तद्धि गुह्यतमं स्थानं वासुदेवस्य सुव्रत ॥५॥
सर्वेषामेव भूतानां भर्तुर्मोक्षस्य सर्वदा । अस्मिन्सिद्धाः सदा विप्र गोविन्दव्रतमास्थिताः ॥६॥
नानालिङ्गधरा नित्यं विष्णुलोकाभिकाङ्क्षिणः । अभ्यस्यन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः ॥७॥
यथा धर्ममवाप्नोति अन्यत्र न तथा क्वचित् । दानं व्रतं तथा होमः सर्वमक्षयतां व्रजेत् ॥८॥
सर्वकामफलावाप्तिर्जायते प्राणिनां सदा । तस्मादत्र विधातव्यं प्राणिभिर्यत्नतः क्रमात् ॥
दानादिकं विप्रपूजा दम्पत्योश्च विशेषतः ॥९॥

सर्वयज्ञादिकफलं सर्वतीर्थावगाहनम् । सर्वदेवावलोकस्य यत्पुण्यं जायते नृणाम् ॥१०॥
तत् सर्वं जायते पुण्यं प्राणिनामस्य दर्शनात् । तस्मादेतन्महाक्षेत्रं पुराणादिषु गीयते ॥११॥
उद्यापनविधिश्चात्र नृभिर्द्विजपुरस्सरम् । अग्रे चन्द्रहरेश्चन्द्रसहस्रव्रतसंज्ञकः ॥१२॥
गतेवर्षद्वये सार्धे पञ्चपक्षे दिनद्वये । दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ॥१३॥
त्र्यधिके वा अशीत्यब्दे चतुर्मासयुते ततः । भवेच्चन्द्रसहस्रं तु तावज्जीवति यो नरः ॥
उद्यापनं प्रकर्तव्यं तेन यात्रा प्रयत्नतः ॥१४॥
यत्पुण्यं परमं प्रोक्तं सततं यज्ञयाजिनाम् । सत्यवादिषु यत्पुण्यं यत्पुण्यं हेमदायिनि ॥
तत्पुण्यं लभते विप्र सहस्राब्दस्य जीविभिः ॥१५॥ सर्वसौख्यप्रदं तादृक् पुण्यव्रतमिहोच्यते ॥१६॥
चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम् । चरितब्रह्मचर्यस्य जितवाक्कायमानसः ।
पौर्णमास्यां तथा कृत्वा चन्द्रपूजां च कारयेत् ॥१७॥
पूर्वञ्च मातरः पूज्या गौर्यादिकक्रमेण च । ऋत्विजः पूजयेद्भक्त्या वृद्धिश्राद्धपुरः सरम् ॥१८॥
प्रयतैः प्रतिमा कार्या चन्द्रमण्डलसन्निभा । सहस्रसंख्या त्वथवा तदर्धं वा तदर्धकम् ॥
निज वित्तानुमानेन तदर्धेन तदर्धकम् ॥१९॥
ततः श्रद्धानुमानाद्वा कार्या वित्तानुमानतः । अथवा षोडश शुभा विधातव्याः प्रयत्नतः ॥२०॥
चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः । माषैः षोडशभिः कार्या प्रत्येकं प्रतिमा शुभा ॥२१॥
सोममन्त्रेण होमस्तु कार्यो वित्तानुमानतः । प्रतिमास्थापनं कुर्यात्सोममन्त्रमुदीरयेत् ॥२२॥
सोमोत्पत्तिं सोमसूक्तं पाठयेच्च प्रयत्नतः । चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः ॥२३॥
चन्द्रन्यासं कलान्यासं कारयेन्मण्डले जलम् । एकादशेन्द्रियन्यासं तथैव विधिपूर्वकम् ॥२४॥
चन्द्रविम्बनिभं कार्यं मण्डलं शुभ्रतण्डुलैः । मध्ये च कलशः स्थाप्यो गव्येन पयसा प्लुतः ॥२५॥
चतुरस्रेषु समपूर्णान् कलशान्स्थापयेद्बहिः । मण्डले चन्द्रपूजा च कर्तव्या नामभिः क्रमात् ॥२६॥
हिमांशवे नमश्चैव सोमचन्द्राय वै नमः । चन्द्राय विधवे नित्यं नमः कुमुदबन्धवे ॥२७॥
सुधांशवे च सोमाय औषधीशाय वै नमः । नमोऽब्जाय मृगाङ्काय कलानां निधये नमः ॥२८॥
नमो नक्षत्रनाथाय शर्वरीपतये नमः । जैवातृकाय सततं द्विजराजाय वै नमः ॥२९॥
एवं षोडशभिश्चन्द्रः स्तोतव्यो नामभिः क्रमात् ॥३०॥
ततो वै प्रयतो दद्याद्विधिमन्मन्त्रपूर्वकम् । शङ्खतोयं समादाय सपुष्पफलचन्दनम् ॥३१॥
नमस्ते मासमासान्ते जायमानः पुनः पुनः । गृहाणार्घ्यं शशाङ्कत्वं रोहिण्या सहितो नमः ॥३२॥
एवं सम्पूज्य विधिवच्छशिनं प्रणतो भवेत् । षोडशान्ये च कलशा दुग्धपूर्णाः सरत्नकाः ॥
सवस्त्राच्छादनाः शान्त्यै दातव्यास्ते द्विजन्मने ॥३३॥ अभिषेकं ततः कुर्यात्पायसेन जलेन तु ॥३४॥
ऋत्विजां मनसस्तुष्टिः कार्या वित्तानुमानतः । ब्राह्मणं भोजयेत्तत्र सकुटुम्बं विशेषतः ॥३५॥
पूजनीयौ प्रयत्नेन वस्त्रैश्च द्विजदम्पती । कर्तव्यञ्च ततो भूरिदक्षिणादानमुत्तमम् ॥३६॥
प्रतिमाश्चप्रदातव्या द्विजेभ्यो धेनुपूर्विकाः । सुवर्णं रजतं वस्त्रं तथान्नं च विशेषतः ॥
दातव्यं चन्द्रसुप्रीत्यै हर्षादिवं द्विजन्मने ॥३७॥

उपवासविधानेन दिनशेषं नयेत्सुधीः। अनन्तरे च दिवसे कुर्याद्भगवदर्चनम् ॥
बान्धवैः सह भुञ्जीत नियमञ्च विसर्जयेत् ॥३८॥
एवञ्च कुरुते चन्द्रसहस्रं व्रतमुत्तमम्। ब्राह्मघ्नोऽपि सुरापोऽपि स्तेयी च गुरुतल्पगः ॥
व्रतेनानेन शुद्धात्मा चन्द्रलोकं व्रजेन्नरः ॥३९॥
यादृशश्च भवेद्विप्र प्रियो नारायणस्य च। एवं करोति नियतं कृतकृत्यो भवेन्नरः ॥४०॥
इति श्री स्कन्दे चन्द्रहरेर्माहात्म्यवर्णने तृतीयः।

## चन्द्रपूजनम् गोगिता दानञ्च

(चन्द्रमाका ८४ नामले र ८४ नरकको नामले पूजा गरिसकेपछि चामल, श्रीखण्ड, कपूर, चाँदी, शङ्ख, सेतो वस्त्र, दही, मोती, ८६ गोदान, ८४ गीता दान गर्नुपर्दछ।)

## अथ चतुरशीतिसिद्धानां पूजनम्

**ततो मङ्गलाचरणपाठं कृत्वा कर्मपात्रं विधाय दीपकलशगणेशादीनां पूजां समाप्य ब्राह्मणद्वारा–**

**ॐ पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीञ्जीवदानुम्।**
**यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते ॥**

**प्रोक्षणीरासादय द्विषतो वधोसि। इति मन्त्रस्य सहस्रसंख्यया जपं कारयेत्। ततो लोकपालानां पूजा मध्ये वेद्यामनन्तं कूर्मं पीठादधो धर्ममधर्मं ज्ञानमज्ञानं वैराग्यमवैराग्यमैश्वर्यमनैश्वर्य-मीशानक्रमेण पूजयित्वा महीद्यौरिति मन्त्रेण भूमिशोधनं कृत्वा धान्यमसीति मन्त्रेण धान्यं संस्थापयेत्। तत्र कलशं संस्थाप्य तस्योपरि ताम्रपात्रे चतुरशीति सुवर्णप्रतिमासु चतुरशीति सिद्धानां मनोजूतिरिति मन्त्रेण प्राणप्रतिष्ठां कृत्वा ततो सिद्धकोष्ठाद्बहिरीशानादि क्रमेण चतुष्कोणेषु सनक-सनन्दन-सनातन-सनत्कुमारान् सम्पूज्य सिद्धभद्रमालिख्य मध्यकोष्ठेषु सर्वतोभद्रमण्डलस्यदेवानां दध्यक्षतादिभिरीशानादिक्रमेण परितो दशरेखासु पूजयेत् –**

(सर्वतोभद्रमाथि धान राखेर ८४ कलशमा थालीमाथि प्रतिमा राखेको कोठामा पूजा गर्ने)

१. ॐ ऋद्ध्यै नमः।
२. ॐ वृद्ध्यै नमः।
३. ॐ तुष्ट्यै नमः।
४. ॐ कान्त्यै नमः।
५. ॐ दयायै नमः।
६. ॐ पुष्ट्यै नमः।
७. ॐ क्रियायै नमः।
८. ॐ उन्नत्यै नमः।
९. ॐ क्षान्त्यै नमः।
१०. ॐ क्षमायै नमः।
११. ॐ शुभ्रायै नमः।
१२. ॐ योगायै नमः।
१३. ॐ प्रभावत्यै नमः।
१४. ॐ वैष्णव्यै नमः।
१५. ॐ चान्द्र्यै नमः।
१६. ॐ सौर्यै नमः।
१७. ॐ मोघायै नमः।
१८. ॐ कलायै नमः।
१९. ॐ सिद्धायै नमः।

**ततश्चतुरशीतिकोष्ठेषु सिद्धादीन् पूजयेत्। ईशानादिक्रमेण नाम मन्त्रैः –**

(८४ कलशको थालीमाथिको प्रतिमामा ८४ नामले र कोष्ठका ८४ नरकको पूजा गर्ने)

१. ॐ सिद्धाय नमः । (वह्निकुण्ड)
२. ॐ सिद्धेश्वराय नमः । (तप्तकुण्ड)
३. ॐ सिद्धसुखाय नमः । (क्षरकुण्ड)
४. ॐ सिद्धदर्शनाय नमः । (विट्कुण्ड)
५. ॐ महासिद्धाय नमः । (मूत्रकुण्ड)
६. ॐ सिद्धदेवाय नमः । (श्लेष्मकुण्ड)
७. ॐ सिद्धशास्त्राय नमः (गरकुण्ड)
८. ॐ सिद्धाचार्याय नमः । (दूषिकुण्ड)
९. ॐ ज्ञानसिद्धाय नमः । (वसाकुण्ड)
१०. ॐ सिद्धभुजे नमः । (शुक्रकुण्ड)
११. ॐ सिद्धदक्षिणाय नमः । (असृक्कुण्ड)
१२. ॐ तीर्थसिद्धाय नमः । (अश्रुकुण्ड)
१३. ॐ योगसिद्धाय नमः । (गात्रमलकुण्ड)
१४. ॐ भोगसिद्धाय नमः । (कर्णविटकुण्ड)
१५. ॐ गुणसिद्धाय नमः । (मज्जाकुण्ड)
१६. ॐ चन्द्रसिद्धाय नमः । (मांसकुण्ड)
१७. ॐ गणसिद्धाय नमः । (नक्रकुण्ड)
१८. ॐ अतिसिद्धाय नमः । (लोमकुण्ड)
१९. ॐ सिद्धसेनाय नमः । (केशकुण्ड)
२०. ॐ सिद्धघटाय नमः । (अस्थिकुण्ड)
२१. ॐ सिद्धसूर्याय नमः । (ताम्रकुण्ड)
२२. ॐ अनुसिद्धकाय नमः । (लोहकुण्ड)
२३. ॐ सिद्धकालाय नमः । (चर्मकुण्ड)
२४. ॐ सिद्धकामाय नमः । (तप्तसुराकुण्ड)
२५. ॐ सिद्धब्रह्मस्वरूपाय नमः । (तृक्ष्णकण्टककुण्ड)
२६. ॐ सिद्धकर्त्रे नमः । (विषकुण्ड)
२७. ॐ सिद्धभर्त्रे नमः । (प्रतप्तकुण्ड)
२८. ॐ सिद्धिदाय नमः । (कुन्तकुण्ड)
२९. ॐ सिद्धसाधकाय नमः । (कृमिकुण्ड)
३०. ॐ सिद्धातिगाय नमः । (पूयकुण्ड)
३१. ॐ कलासिद्धाय नमः । (सर्पकुण्ड)
३२. ॐ सर्वसिद्धाय नमः । (मशकुण्ड)
३३. ॐ प्रसिद्धकाय नमः । (दंशकुण्ड)
३४. ॐ सिद्धमानाय नमः । (गरलकुण्ड)
३५. ॐ सिद्धमानाय नमः । (वज्रदष्ट्रकुण्ड)
३६. ॐ सिद्धकल्पाय नमः । (वृश्चिककुण्ड)
३७. ॐ सिद्धामृतकलातीताय नमः । (शरकुण्ड)
३८. ॐ सिद्धपाराय नमः । (शूलकुण्ड)
३९. ॐ सिद्धज्ञाय नमः । (खड्गकुण्ड)
४०. ॐ सिद्धनायकाय नमः । (गोलाकुण्ड)
४१. ॐ सिद्धावलाय नमः । (नक्रकुण्ड)
४२. ॐ सत्सिद्धाय नमः । (काककुण्ड)
४३. ॐ सिद्धमयाय नमः । (मन्थानकुण्ड)
४४. ॐ सिद्धैकसाधनाय नमः । (वीजकुण्ड)
४५. ॐ लोकसिद्धाय नमः । (बज्रकुण्ड)
४६. ॐ यज्ञसिद्धाय नमः । (तप्तपाषाणकुण्ड)
४७. ॐ शुद्धसिद्धाय नमः । (तीक्ष्णपाषणकुण्ड)
४८. ॐ अवसिद्धाय नमः । (लालाकुण्ड)
४९. ॐ वषट्सिद्धाय नमः । (मसीकुण्ड)
५०. ॐ स्वस्तिसिद्धाय नमः । (चूर्णकुण्ड)
५१. ॐ भूतसिद्धाय नमः । (चक्रकुण्ड)
५२. ॐ धीसिद्धाय नमः । (वक्रकुण्ड)
५३. ॐ भव्यसिद्धाय नमः । (कूर्मकुण्ड)
५४. ॐ पूतसिद्धाय नमः । (ज्वालाकुण्ड)
५५. ॐ शम्भुसिद्धाय नमः । (भस्मकुण्ड)
५६. ॐ सुसिद्धकाय नमः । (दग्धकुण्ड)
५७. ॐ दक्षसिद्धाय नमः । (असिपत्रकुण्ड)
५८. ॐ रूपसिद्धाय नमः । (क्षुरधारकुण्ड)
५९. ॐ हंससिद्धाय नमः । (तप्तसूचिमुखकुण्ड)
६०. ॐ प्रसिद्धाय नमः । (गोकामुखकुण्ड)
६१. ॐ विष्णुसिद्धाय नमः । (नक्रमुखकुण्ड)
६२. ॐ मुक्तसिद्धाय नमः । (गजंमुखकुण्ड)

६३. ॐ सिद्धकसिद्धाय नमः । (गोमुखकुण्ड)

६४. ॐ सिद्धवाक् सिद्धधाम्ने नमः । (कुम्भिपाकक्)

६५. ॐ सिद्धतनवे नमः । (कालसूत्रकुण्ड)

६६. ॐ सिद्धानन्दस्वरूपाय नमः । (मत्स्यौदक्)

६७. ॐ पुण्यसिद्धाय नमः । (कृमितन्तुसकुण्ड)

६८. ॐ भुवः सिद्धाय नमः । (पांसुभोज्यकुण्ड)

६९. ॐ स्वर्गसिद्धाय नमः । (पाशवेष्टकुण्ड)

७०. ॐ सिद्धमन्त्रालय नमः । (शूलप्रोतकुण्ड)

७१. ॐ शान्तिसिद्धाय नमः । (प्रकम्पनकुण्ड)

७२. ॐ पुरुसिद्धाय नमः । (उल्कामुखकुण्ड)

७३. ॐ हिरण्यसिद्धाय नमः । (अन्धकूपकुण्ड)

७४. ॐ वाक्सिद्धाय नमः । (वेध्रनकुण्ड)

७५. ॐ तत्त्वसिद्धाय नमः । (ताडनकुण्ड)

७६. ॐ अतिसिद्धाय नमः । (जालरंधंकुण्ड)

७७. ॐ सिद्धरत्नाय नमः । (देहचूर्णकुण्ड)

७८. ॐ सिद्धमालिने नमः । (दलनंकुण्ड)

७९. ॐ सिद्धवैकुण्ठधृषे नमः । (शोषणकुण्ड)

८०. ॐ सिद्धसेनाय नमः । (कषम्कुण्ड)

८१. ॐ सिद्धसाराय नमः । (शूर्पकुण्ड)

८२. ॐ रुद्रसिद्धाय नमः । (ज्वालामुखकुण्ड)

८३. ॐ महामहामहासिद्धाय नमः । (धूमांधंकुण्ड)

८४. ॐ चतुरशीतिसंज्ञकाय नमः । (नागवेष्टनंक्)

बहिश्चतुष्कोणेषु सनकादिचतुरः सिद्धान् पूजयेत् । (नक्षत्रहरूको पूजा गर्ने)

ॐ सनकाय नमः । ॐ सनन्दनाय नमः । ॐ सनातनाय नमः । ॐ सनत्कुमाराय नमः । पुनश्चतुरशीति प्रतिकोष्ठेषु त्रिरावृत्या अष्टाविंशति नक्षत्राणि पूजयेत् । तानि यथाः–

१. ॐ रोहिण्यै नमः ।

२. ॐ मृगशिरसे नमः ।

३. ॐ आर्द्रायै नमः ।

४. ॐ पुनर्वसवे नमः ।

५. ॐ तिष्याय नमः ।

६. ॐ अश्लेषायै नमः ।

७. ॐ मघायै नमः ।

८. ॐ पूर्वाफाल्गुन्यै नमः ।

९. ॐ उत्तराफाल्गुन्यै नमः ।

१०. ॐ हस्ताय नमः ।

११. ॐ चित्रायै नमः ।

१२. ॐ स्वात्यै नमः ।

१३. ॐ विशाखायै नमः ।

१४. ॐ अनुराधायै नमः ।

१५. ॐ ज्येष्ठायै नमः ।

१६. ॐ मूलाय नमः ।

१७. ॐ पूर्वाषाढायै नमः ।

१८. ॐ उत्तराषाढायै नमः ।

१९. ॐ अभिजिते नमः ।

२०. ॐ श्रवणाय नमः ।

२१. ॐ धनिष्ठायै नमः ।

२२. ॐ शतभिषजे नमः ।

२३. ॐ पूर्वभाद्रपदायै नमः ।

२४. ॐ उत्तरभाद्रपदायै नमः ।

२५. ॐ रेवत्यै नमः ।

२६. ॐ अश्विन्यै नमः ।

२७. ॐ भरण्यै नमः ।

२८. ॐ कृत्तिकायै नमः ।

## तत्रादौ न्यासः

(न्यास विधि)

१. ॐ अर्यम्णे नमः ।

२. ॐ मित्राय नमः ।

३. ॐ वरुणाय नमः ।

४. ॐ इन्द्राय नमः ।

५. ॐ विवस्वते नमः ।
६. ॐ त्वष्ट्रे नमः ।
७. ॐ विष्णवे नमः ।
८. ॐ अंशवे नमः ।
९. ॐ भगाय नमः ।
१०. ॐ पूष्णे नमः ।
११. ॐ पर्जन्याय नमः ।
१२. ॐ धात्रे नमः ।
१३. ॐ माधवाय नमः । इति क्रमतो न्यसेत् ।

पुनः प्रतिकोष्ठेषु अष्टाविंशति नक्षत्राणि त्रिरावृत्या पूजयेत् । (पुनः नक्षत्रहरूको पूजा गर्ने)

ततो मध्यमकोष्ठे सर्वतोभद्रं संस्थाप्य प्रतिकोष्ठेषु सर्वतोभद्रस्य षट्पञ्चाशद्देवता आवाह्य पूजयेत् । क्रमतः कलशपूर्णपात्रभूतकर्णिकायां धान्यतण्डुलयोरुपरि आजिघ्रकलशमिति मन्त्रेण चित्रकलशं संस्थाप्य वरुणमावाह्य पूजयेत् । (चित्रकलशको पूजा गर्ने)

कलशोपरि षड्दलाम्रस्थाल्यां स्वर्णनिर्मितपलत्रयपरिमितचन्द्रप्रतिमायां प्राणप्रतिष्ठां कृत्वा चन्द्रपूजाविधिना पूजनञ्च कृत्वोपायनादिकं समर्प्य अर्घ्यं दत्त्वा नमस्कृत्य चन्द्रपूजां समाप्य मध्ये सुवर्णपलत्रयनिर्मितलक्ष्मीनारायणप्रतिमां संस्थाप्य प्राणप्रतिष्ठां कृत्वा न्यासं कुर्यात् –

## लक्ष्मीनारायणपूजने आदौ न्यासः (न्यास गर्ने)

ॐ विष्णवे नमः, वामकरे । ॐ माधवाय नमः, दक्षकरे । ॐ गोविन्दाय नमः, वामपादे । ॐ कृष्णाय नमः, वामजानुनि । ॐ केशवाय नमः, दक्षजानुनि । ॐ श्रीपतये नमः, वामकट्याम् । ॐ पद्मनाभाय नमः, दक्षकट्याम् । ॐ हृषीकेशाय नमः, नाभौ । ॐ वासुदेवाय नमः, हृदये । ॐ जगत्पतये नमः, वामकुक्षौ । ॐ वैकुण्ठाय नमः, दक्षकुक्षौ । ॐ पुण्डरीकाक्षाय नमः, कण्ठे । ॐ मधुसूदनाय नमः, वक्त्रे । ॐ गोपतये नमः, वामचक्षुषि । ॐ दामोदराय नमः, दक्षचक्षुषि । ॐ जगन्नाथाय नमः, शिरसि ।

## षोडशोपचारेण पूजनम् (षोडशोपचारले पूजा गर्ने)

ततः पुरुषसूक्तेन पाद्यादिभिः षोडशोपचारैः संपूज्य अङ्गपूजां कुर्यात् ।

## अङ्गपूजा (अङ्गपूजा गर्ने)

ॐ कृष्णाय नमः, पादौ पूजयामि । ॐ केशवाय नमः गुल्फौ पूजयामि । ॐ वामनाय नमः, कटिं पूजयामि । ॐ अच्युताय नमः, हृदयं पूजयामि । ॐ माधवाय नमः, कण्ठं पूजयामि । ॐ रामाय नमः, बाहू पूजयामि । ॐ नृसिंहाय नमः, मुखं पूजयामि । ॐ वराहाय नमः, नासिकां पूजयामि । ॐ विष्णवे नमः, नेत्रे पूजयामि । ॐ शार्ङ्गिणे नमः, ललाटं पूजयामि, ॐ मुरारये नमः शिरः पूजयामि । ॐ लक्ष्मीनारायणाय नमः, सर्वाङ्गं पूजयामि । इत्यङ्गपूजां विधाय धूपं दीपं नैवेद्यं च कृत्वाऽऽचमनमारार्तिकं ताम्बूलमुपायनं च दत्त्वा प्रदक्षिणां नमस्कारं कृत्वा गोदानशय्यादानं च कृत्वा षट्पञ्चाशदधिकद्विशतमुष्टि (२५६) परिमिततण्डुलयुतं सदक्षिणं पूर्णपात्रं कुर्यात् । ततो विसर्जनाभिषेकतिलकादिकं कृत्वा तत्सर्वं आचार्याय प्रतिपादयेत् । यस्यस्मृत्येत्यादि पठित्वा कर्मेश्वरार्पणं कुर्यात् ।

(अष्टमहादान, दशदान, पञ्चधेनु, शय्यादान, पूर्णपात्र, सिदा, दक्षिणा गरी विसर्जन गर्ने)

। इति चतुरशीतिपूजाविधिः ।